गुणाष्टकत्वात् तेष्वतिप्रसक्तस्य नित्याविर्भूतापहतपाप्मत्वादिमत्त्वस्य कथं ब्रह्मलिङ्गत्वमिति शङ्काऽपि निरस्ता। सेतुत्वादीनां तदसंभावितधर्माणामत्र (मपि) श्रवणात्।

ननु 'य एषोऽक्षिणि पुरुषो दृश्यत' इति प्रजापतिविद्यागतवाक्यान्यपि ब्रह्मपराण्येव भवन्तु। वाक्यत्रयेपि, 'एतदमृतमभयमेतत् ब्रह्मे'ति श्रवणात, अक्षिवाक्ये उपकोसलविद्योपास्यप्रत्यभिज्ञानात्, य एष स्वप्ने महीयमानश्चरती' वाक्येऽपि स्वाप्नपदार्थस्रष्टृत्वेन महीयमानस्य परमात्मन एव प्रतिपादनसंभवात, सुषुप्तिपर्यायेऽपि, यत्र यस्मिन्नाधारे समस्तः सुप्तो भवतीति सुषुप्त्याधारब्रह्मपरत्वोपपत्तेरिति चेत्—उच्यते। स्वप्नपर्याये 'घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवित्तेव भवत्यपि रोदितीवे'ति इन्द्रेण तस्य हन्यमानत्वद्राव्यमाणत्वबन्धुजनमरणाद्यप्रियद्रष्टृत्वरोदितृत्वादिप्रतिभासतो दुष्टत्वस्योपन्यासात्, सुषुप्तिसम्बन्ध्यात्मोपदेशानन्तरं 'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि, विनाशमेवापीतो भवती'ति तस्य विशेषज्ञानरहिततया विनष्टप्रायत्वस्योक्तत्वात्, अभयत्वामृतत्वादीनाञ्च मुक्त्यवस्थाभाविरूपापेक्षयाऽप्युपपत्तेः जीवविषयत्वमेव द्वितीयतृतीयपर्याययोः। एवं तयोः स्वप्नसुषुप्त्यवस्थावज्जीवपरत्वे स्थिते प्रथमपर्यायस्य जागरावस्थावज्जीवविषयत्वमेवोपपद्यते। 'य एषोऽक्षिणि पुरुषो दृश्यत' इत्यस्य दर्शनलिङ्गादक्षिणि सन्निहितोऽनुमीयत इत्यर्थकत्वेन जागरावस्थाविषयत्वस्यैवोपपन्नत्वात् [4]उपकोसलविद्यावैषम्यम्। ततश्च प्रजापतिवाक्ये जीवः संसारदशायामनृततिरोहितापहतपाप्मत्वादिकः सन्[5] मुक्तिदशायां साधनाधीनतदाविर्भावः प्रतिपाद्यते। दहराकाशे श्रूयमाणं त्वपहतपाप्मत्वादिकं नित्याविर्भूतमेव ग्राह्यम् नित्याविर्भूतस्य ग्रहणसंभवे तिरोहितत्वेनासत्प्रायस्य साधनाधीनाविर्भावस्य ग्रहणायोगात्।

4. पदमिदं क. कोशे। 5. सन्. क. स. क ख.

---

**वाक्यत्रयेपि**। अक्षिस्वप्नसुषुप्तिवाक्येषु त्रिष्वपि। अत्र अपिशब्दसत्त्वात्, **अक्षिवाक्ये उपकोसलविद्योपास्यप्रत्यभिज्ञानात्**' इत्यंश एतत्पूर्वं स्यादिति तर्क्यते। **द्रष्टृत्वेति**। वेत्तृत्वं लब्धृत्वम्। फलितं तु इदं तत्र।

**अभयत्वेति**। वाक्यत्रयेऽपि **एतदभयमेतद् ब्रह्मेति** श्रवणवत् मघवन् मर्त्यमित्यारभ्यान्ततः क्रियमाणतत्त्वोपदेशसंदर्भेऽपि तच्छ्रवणं यदि स्यात्, तदा ब्रह्मनिरूपणपरत्वं मन्येत; तथा जीवब्रह्माभेदोऽपि शङ्क्येत। न त्वेवम्। प्रत्युत तत्त्वोपदेशकाले परंज्योतिरुपसंपद्येत्यादिना भेदमेव तात्त्विकं दर्शयति। तेन तत्र प्राक् अभयामृतब्रह्मोक्तिः स्तुतिमात्रमिति ज्ञायत इत्यपि भाव्यम्।

८—१३

**श्यामाच्छबळं प्रपद्ये शबलाच्छ्यामं प्रपद्ये ।**
**अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य ।**

ननु [स्यादेवम्—यदि] ब्रह्मणो नित्याविर्भूतापहतपाप्मत्वादिमत्त्वं जीवस्यातथात्वञ्च यदि प्रमाणसिद्धं स्यात्; तदा दहराकाशे श्रूयमाणमपहतपाप्मत्वादिकं ब्रह्मगतं नित्याविर्भूतमेव ग्राह्यमिति शक्यते वक्तुम्, न च तदस्तीति शङ्कमानं प्रत्याह—"अनुकृतेस्तस्य च"। **अनुकृतिः** अनुकारः=साम्यम्। **तस्य** परब्रह्मण उपासनया तदनुकारो हि जीवस्य श्रूयते—'तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'ति। "अपि स्मर्यते"। 'इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः' इति च स्मर्यते इत्यर्थः। ततश्च तदुपासनासिद्धमेतस्यैश्वर्यम्। तस्य तु नान्योपासनसिद्धम्; अपितु नित्याविर्भूतम्। ततश्च दहरवाक्ये, श्रूयमाणमपहतपाप्मत्वादिकं ब्राह्ममेवेति स्थितम्। प्रकृतमनुसरामः ॥ ८-१२.

**श्यामात्—प्रपद्ये**। एते च मन्त्राः विद्याङ्गभूताः विद्वद्भिर्जप्याः। परमात्मनो हि त्रिविधमुपासनमुक्तम्, "उपासात्रैविध्या' दित्यत्र, चिच्छबलतया अचिच्छबलतया स्वरूपेण च। तत्र स्वरूपेणानुसन्धाने ज्ञानादिगुणवत् दिव्यविग्रहयोगिताऽप्यनुसन्धेया। तत्सिद्ध्यर्थमेव हि पुण्डरीकाक्षमप्राकृतं वपुरतिदिश्यते—'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति। तत्र 'स यश्चायं पुरुष' इत्यानन्दमयमनूद्य 'यश्चासावादित्ये' इति विग्रहातिदेश इति **व्यासार्यैः** उपासात्रैविध्यादित्यत्रोक्तम्। **वेदार्थसंग्रहे** च भगवता **भाष्यकृता**, "य एषोऽन्तरादित्ये **हिरण्मयः** पुरुषः', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि',—विद्युद्वर्णात्पुरुषादित्यर्थः—'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा'— मध्यस्थनीलतोयदा

---

ननु प्रजापतिविद्योक्तजीवस्वरूपोपासकस्य तत्क्रतुन्यायेन जीवस्वरूपानुभवमात्रं संभाव्यते, न सर्वलोकसर्वकामप्राप्तिरपीति शङ्का मा भूदिति **श्यामादि**त्यादिमन्त्रपाठस्तदनन्तरम्। तेन जीवस्वरूपाविर्भावस्य परज्योतिरुपसंपत्तिमूलकत्वस्योक्ततया तदुपसत्त्युपायभूतं तदुपासनमपि कार्यमेव। तत्रैवं मन्त्र इति ज्ञापितं भवति। दहरः परमात्मा द्विप्रकारः **हृदयपरिच्छिन्नदिव्यमङ्गलविग्रहविशिष्टः**, दहरहृदयान्तर्वर्तिजीवान्तर्वर्ती चेति। उभयविधोऽप्युपास्य इति **श्यामा**दिति मन्त्रेणोच्यते।

धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीति । अभिसंभवामीति ॥

इति अष्टमाध्याये त्रयोदशः खण्डः ।

---

विद्युल्लेखेव सेयं दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहितनीलतोयदा विद्युदिवाभातीत्यर्थः '' इत्युक्तम् । अतो नीलविग्रहवैशिष्ट्यं सिद्धम् । अत एव हि 'श्यामा एकरूपा भवन्ति, एवमिव हि प्रजापतिः समृद्धया' इति प्रजापतिशब्दितस्य भगवतः श्यामरूपत्वमुक्तम् । तस्मात् **श्याम** इति विग्रहविशिष्टस्वरूपमुच्यते । ततश्च श्यामादिति ल्यब्लोपे पञ्चमी । श्यामविग्रहविशिष्टं स्वरूपं प्रपद्य=स्वरूपमुपास्य **शबलं** चिदचिद्विशिष्टं **प्रपद्ये** उपासे । शबलमुपास्य श्याममुपासे इत्यर्थः । ततश्च निरन्तरं त्रैविध्येनोपासे इत्यर्थः । **अश्व इव—अभिसंभवामीति** । अश्वो रोमाणीव स्वयं पापं विधूय—**विधूयेत्य**नेन पापत्याग उच्यते—राहुमुखप्रमुक्तश्चन्द्र इव शरीराद्विमुक्तः **अकृतं** नित्यं भगवल्लोकं **कृतात्मा** कृतार्थात्मा सन् **अभिसंभवामि** प्राप्नुवामीत्यर्थः । **अभिसंभामीत्यभिसंभवामीति** द्विरुक्तिः खण्डसमाप्त्यर्था ॥ ८-१३.

---

**रोमाणीवे**ति । **रोमाणि विधूय**—श्रमं पांस्वादि च रोमतो विधूयेति शाङ्करम् । तथाच कम्बलविधूननमितिवत् रोमविधूननं नाम रोम्णोऽपनेयापनयः । एवञ्च पापविधूननमपि पापादिगतफलजननशक्तेः पापात् प्रच्यावनम् । प्रच्युता च सा शक्तिः द्विषदादिकर्तृकं द्वेषादि संक्रामति । विद्वत्संबन्धिपुण्यपापयोः यत् फलं विद्वदनुभाव्यम्, तत् फलं तत्र विदुषि द्वेषं स्नेहञ्च कलयतां भवतीति यावत् । वस्तुतः, विधूयेत्यनेन पापत्याग उच्यते इत्युक्तत्वात् विधूयेत्यस्य त्यक्त्वेत्येवार्थः । अस्तु **रोमाणी**तिपदं रोमगतपांस्वादीत्यर्थकं यथाश्रुतार्थस्य सर्वथा बाधे । वस्तुतस्तु **भगवता भाष्यकृता वेदान्तसारे**, वृद्धिह्राससूत्रे दर्शनादितिपदव्याख्यावसरे "अश्वो हि रोमाणि सहजानि स्वावयवभूतानि मूर्तद्रव्याणि स्वशरीरं कम्पयन् कानिचिन्मुञ्चती"ति प्रकृतश्रुत्यर्थ उक्तः । अतो यथाश्रुतमेव निर्बाधम् । **चन्द्र इवे**त्यादि । चन्द्रकर्तृकराहुमुखावधिकस्वात्मविमोचनतुल्यं विद्वत्कर्तृकशरीरधूननम् । **शरीरं धूत्वे**त्यस्य शरीरात् प्रमुच्येत्यर्थः । **खण्डसमाप्त्यर्थे**ति । द्विर्वचनं मन्त्रसमाप्त्यर्थमिति शाङ्करम् ।

## ८—१४

[1]**आकाशो वै नाम नामरूपयोर्निर्वहिता, ते यदन्तरा तद् ब्रह्म तदमृतँ स आत्मा ।**

1. अत्र पाठभेदाः भाष्ये द्रष्टव्याः ।

---

**आकाशो वै—आत्मा ।** अत्र, आकाशो ह वै नामरूपयोर्निर्वहिते[ति आकाशो वै नामरूपयोनिर्वहिते] त्यपि पाठान्तरं(पाठद्वयं)द्रष्टव्यम् । उभयत्राप्ययमर्थः । श्रुतिष्वाकाश इति प्रसिद्धः नामरूपयोर्**निर्वहिता** कर्ता । **यत्** आकाशशब्दितम् । विधेयब्रह्माभिप्रायेण नपुंसकत्वम् । **ते** नामरूपे **अन्तरा** मध्ये वर्तमानम् । ताभ्यामस्पृष्टमित्यर्थः । **ब्रह्मामृतात्म**शब्दानां पूर्ववदेवार्थः ।

इदञ्च वाक्यं समन्वयाध्याये चिन्तितम् । तत्र 'आकाशो ह वै नामरूपयोर्निर्वहिते' ति नामरूपवोढृत्वश्रवणात्, नामरूपवोढृत्वस्य परमात्मनि 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी' ति जीवद्वारकतयैवोपपाद्यतया नामरूपवोढृत्वस्य जीव एव स्वरसत्वात्, 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति वाक्यप्रतिपाद्यस्य, 'नामरूपयोर्निर्वहिता ते यदन्तरे' ति वाक्ये प्रत्यभिज्ञानात्, पूर्वं निरूढनामरूप एव पश्चाद्विमुक्त इह प्रतिपाद्यते । 'आकाशशब्दस्यापि यौगिक्या वृत्त्या मुक्तात्मनि संभवादित्येवं पूर्वपक्षे प्राप्ते—उच्यते—"आकाशोऽर्थान्तरत्वादिव्यपदेशात्" । आकाशः परं ब्रह्म, अर्थान्तरत्वादिव्यपदेशात्, 'नामरूपयोर्निर्वहिते' ति जीवापेक्षया,' **अर्थान्तरत्वस्य भेदकधर्मस्य** व्यपदेशात् । न हि नितरां वोढृत्वं, निर्वोढृत्वं, रूढ्या निर्वोढृशब्दस्य

---

**ते यदन्तरेति** । 'यत् **अन्तरा** विहाय **नामरूपे** वर्तेते । ', 'ते नामरूपे **अन्तरा** विहाय यद्वर्तेत ' इति वेति शाङ्करम् । द्वितीययोजनाऽत्रादृता । श्रीभाष्ये तु **यत्** यस्मात् नामरूपे **अन्तरा** = नामरूपास्पृष्ट आकाशः. तस्मान्निर्वोढेत्यर्थः स्वरसप्रतीतः । **भेदकधर्मस्येति** । ननु ब्रह्मत्वामृतत्वादिरपि भेदकधर्म इत्यविशेषः । उच्यते । ब्रह्मत्वं भेदः, न तु भेदकधर्मः । नामरूपनिर्वोढृत्वं तु भेदकधर्मः । तर्हि अर्थान्तरत्वपदेन भेदो ब्रह्मत्वमेव ग्राह्यम् । नैवम् । श्रुतौ प्रथमोक्तस्य निर्वोढृत्वस्य प्रथमं सूत्रेऽपि ग्रहणौचित्यात् भेदकधर्मोऽर्थान्तरत्वमित्युक्तमिति । अथवा नामरूपस्पृष्टत्वं जीवत्वम्; अर्थान्तरत्वं तद्भिन्नत्वरूपमस्पृष्टत्वम् । ततश्च नामरूपास्पृष्टत्वविशिष्टतन्निर्वोढृत्वरूप **एको** धर्मः अर्थान्तरत्वघटितत्वादर्थान्तरत्वरूपः भेदघटितमूर्तिकत्वाद् भेदकधर्म इत्युच्यत इति ।

**प्रजापतेः सभां वेश्म प्रपद्ये । यशोऽहं भवामि ब्राह्मणानां**

कर्तृत्वाभिधायित्वात् । 'ते यदन्तरे' ति नामरूपास्पृष्टत्वकथनाच्च । नामरूपास्पृष्टत्वे सति नामरूपकर्तृत्वस्य बद्धे मुक्ते वा असंभवात्, मुक्तस्यापि 'जगद्व्यापारवर्जमिति जगद्व्यापारराहित्यस्य प्रतिपादितत्वात् । आदिशब्देनामृतत्वाभयत्वादीनां सङ्ग्रहः ।

ननु प्रत्यगात्मनोऽर्थान्तरत्वव्यपदेशादिति न वक्तुं युक्तम्, शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्मेति च व्यपदिश्यते । तत्राह—"सुषुप्त्युत्क्रान्त्यो-र्भेदेन" । वाजसनेयके 'कतम आत्मा योऽयं विज्ञानमयः प्राणेषु' इति प्रकृतस्य प्रत्यगात्मनः सुषुप्तावुत्क्रान्तौ च 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तर'मिति, 'प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याती' ति च प्राज्ञेन परिष्वङ्गा-न्वारोहावम्नायेते । जीवस्यैव शुद्धावस्थस्य परमात्मत्वे परिष्वङ्गान्वारोहौ नोपपद्ये-याताम् । न ह्यभेदे तौ संभवतः ।

"पत्यादिशब्देभ्यः" । 'सर्वस्य वशी सर्वस्येशानः; सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्; एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाये' ति प्रत्यगात्मासंभावितानां पतित्वादिधर्माणां श्रवणात् नायं मुक्तात्मेति स्थितम् । प्रकृतमनुसरामः ।

**प्रजापतेः—प्रपद्ये** । प्रजापतेः परमात्मनः **सभां** स्थानं वेश्म प्रपद्ये । 'प्रभुविमितं हिरण्मय' मिति दहरविद्यायां निर्दिष्टं वेश्म प्रपद्ये इत्यर्थः । न चात्र प्रजापतिशब्दः कार्यहिरण्यगर्भविषयः । "न च कार्ये प्रत्यभिसन्धि" रिति सूत्रकृतैव निरस्तत्वात् । भाष्यकृता च, "न चायं प्रत्यभिसन्धिः कार्यहिरण्यगर्भे, अपि तु परस्मिन्नेव ब्रह्मणि, 'यशोऽहं भवामि ब्राह्मणाना' मिति एतस्याभिसन्धातुः सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसन्धानात्, 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभावामी'ति

**प्रजापतेः परमात्मन** इति । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्युक्तरीत्या सद् ब्रह्मैवात्र हि प्रजानां पतिः । दर्शितञ्च पूर्वखण्डे भाष्ये श्यामः प्रजापतिरिति । प्रायः श्रुतौ परमात्मन्येव प्रजापतिशब्द इति पराक्रान्तं सूरिभिः ।

**यशो राज्ञां यशो विशां यशोऽहमनु प्रापत्सि । स हाहं यशसां यशः । श्वेत[1]-मदत्कमदत्कँ श्वेतं लिन्दु माऽभिगाम् लिन्दु माऽभिगाम् ॥**

इति अष्टमाध्याये चतुर्दशः खण्डः ।

---

## ८—१५

**तद्धैतद् ब्रह्मा प्रजापतय उवाच, प्रजापतिर्मनवे मनुः प्रजाभ्यः ।**

1. श्येतं शां

---

अभिसंभाव्यब्रह्मलोकस्याकृतत्वश्रवणात्, सवबन्धविनिर्मोकस्य च साक्षाच्छ्रवणात्'' इति भाषितम्। **यशः—यशो विशाम्** । अत्र यशश्शब्देनात्मोच्यते । ब्राह्मणादीनामात्माऽस्मीत्यर्थः । अत्राहमितिशब्दः स्वान्तर्यामिपरमात्मपरः । ननु तव ब्राह्मणादीन् प्रति कथं यशश्शब्दितमात्मत्वमित्यत्राह—**यशः—यशः** । अहं **यशः** यशोरूपं परमात्मानमात्मतया अहंत्वेन प्राप्तवानस्मि, साक्षात्कृतवानस्मि । अतः सोऽहं परमात्मरूपोऽहं **यशसां** जीवात्मनां **यशः** आत्माऽस्मीत्यर्थः। **श्वेतमदत्कमदत्कंश्वेतंलिन्दुमाभिगाम्**। **श्वेतं** शुक्लधातुम् **अदत्कं** [दन्तशून्यं] **श्वेतम्**। अत्र **श्वेत**शब्देन लक्षणया सत्त्वगुण उच्यते। तस्यादत्कं भक्षयितृ । चरमधातोः सत्त्वगुणतत्कार्यज्ञानादिप्रमोषकत्वात् तद्भक्षकत्वम्। तादृशं चरमधातुमदत्कं भक्षयितृ । लिन्दु स्त्रीव्यञ्जनं **माभिगाम्** न प्राप्नुयाम्। चरमधात्वाधारयोनिप्रवेशो माभूदिति, जन्म मा भूदिति यावत्। **लिन्दु माभिगाम्—लिन्दुमाभिगामिति**द्विर्वचनं जप्यमन्त्रपरिसमाप्त्यर्थम्। ८—१४.

**तद्धैतद्ब्रह्मा—प्रजाभ्यः। एतत्** ब्रह्मविज्ञानं **ब्रह्मा** हिरण्यगर्भः **प्रजापतये** कश्यपायेत्यर्थः । शिष्टं स्पष्टम् ।

---

**यशश्शब्देनात्मोच्यते** इति । व्यापनशीलत्वरूपं साधर्म्यं यशस आत्मनश्च । "सर्वात्मभावाभिसंधानात्" इति भाष्यानुरोधेनैवम् । श्येतमदत्कमिति पठित्वा श्येतं वर्णतः पक्कबदरसमं रोहितम्, अदत्कं दन्तरहितमपि भक्षयितृ कामिनां तेजोबलवीर्यविज्ञानविनाशकमित्युक्तं **शाङ्करे**। द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थमिति च । अत्र त्वर्थभेद एव स्वीकृतः । अद भक्षण इति धातोः शत्रन्तादज्ञार्थे कप्रत्ययः औपचारिकमदनमिति ज्ञापनाय ।

**तद्धैतदिति**। यद्यपि **श्यामाच्छबल**मित्यादिना प्रपत्तिविद्यां ततः प्रागनेकभक्तिविद्याश्च उपदिश्य तत्प्रवर्तकपरम्परा, 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्वेताश्वतरान्तदर्शितरीत्या भगवत्पदप्रपन्नचतुर्मुखारम्भेणात्र वर्ण्यते इति सुवचम्—अथापि **श्यामा**दित्यादेः दहरविद्यान्वयमाकलय्य, पृथक् प्रपत्तिपरत्वेनाव्याख्याय, **तद्धैत**दित्यादेरुपनिषदवसानस्थतया छान्दोग्याष्टाध्याय्यर्थपरत्वमभिप्रेत्योक्तं **ब्रह्मविज्ञान**मिति ।

आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत् आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिँसन् सर्वा भूतान्यन्यत्र तीर्थेभ्यः स

---

विद्याङ्गभूततया कर्मानुष्ठातव्यमित्येतत् प्रस्तौति—**आचार्य—शेषेण**। **यथाविधानं** विधिमनतिक्रम्य। गुरोः **कर्मातिशेषेण** कर्मावशिष्टकालेन। गुरुशुश्रूषानवरुद्धेन कालेन अधीत्येति योजना। **व्यासार्यैस्तु** पुरुषार्थाधिकरणे, 'अतिशेषेण निश्शेषमित्यर्थः' इति व्याख्यातम्। तेषामयमाशयः—'ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुरवे, अनुज्ञातो दारान् कुर्वीत,' 'विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नान' मित्यादिस्मृत्यनुसारात्, 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सी' रित्यादिश्रुत्यनुसाराच्च, गुरोर्यथाविधानं आचार्यस्य नियमनमनतिलङ्घ्य कर्तव्यं कर्म अतिशेषेण—अतिमर्यादमित्यादौ अतेर्मर्यादाऽभावे वृत्तेर्दर्शनादतिरर्थाभावे वर्तते। ततश्चातिशेषेण—अशेषेण **अभिसमावृत्य** निर्वर्त्यैत्येवान्वयः। न तु अतिशेषेणेत्यस्याधीत्येति पूर्वणान्वयः। तस्य व्यवहितत्वात् निराकांक्षत्वाच्च। न च 'गुरोः कर्मशेषेण जपेदि' ति गौतमस्मृत्यैकरूप्यात् कर्मातिशेषशब्दस्यापि कर्मातिशिष्टकालपरत्वं वक्तव्यमिति वाच्यम्, शेषातिशेषशब्दयोर्भिन्नार्थत्वेन तत्प्रत्यभिज्ञानाभावादिति। **अभिसमावृत्य—अधीयानः**। **अभिसमावृत्य** समावर्तनं कृत्वा, गुरुकुलान्निवृत्येत्यर्थः। न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्यविहितकर्मनिष्ठ इत्यर्थः। 'शुचौ देशे स्वाध्यायमधीयान' इत्यत्र स्वाध्यायमिति नित्यकर्मणामप्युपलक्षणम्। **धार्मिकान् विदधत्**—पुत्रशिष्यादीन् धर्मे नियुञ्जानः। **आत्मनि—तीर्थेभ्यः**। अनात्मविषयेभ्य इन्द्रियाणि निगृह्य शास्त्रीयहिंसाव्यतिरिक्तां हिंसामकुर्वाण इत्यर्थः। न च "अशुद्धमिति चेन्न शब्दात्" इति सूत्रे

---

**अभिसमावृत्य निर्वर्त्येति**। व्यासार्यपक्षे अत्र समावर्तनं न विवक्षितम्। किंतु गुरवे दक्षिणाप्रदानादि। उक्तनानावचनानुरोधात्। न चाणिजन्तात् कथं निर्वर्त्येत्यर्थलाभ इति वाच्यम्, विवक्षावशात् तल्लाभात्। अस्तु वा वृञ् वरण इति धातुरिह। स्वयं तु **कर्मातिशेषेणे**त्यस्य पूर्वान्वयं, **अभिसमावृत्ये**त्यस्य समावर्तनपरत्वञ्चैवाविरुद्धत्वाद् भाष्यकृदाद्रियते। **शुचौ देश** इति अध्ययनाद्यनुकूलशुचित्वं विवक्षितम्। भगवद्भागवताधिष्ठितदिव्यक्षेत्रादिवासस्थानपरं वेदम्।

**खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते । (१)**

क्रत्वर्थपशुहिंसाया हिंसात्वाभावस्योक्तत्वात, अन्यत्र तीर्थेभ्य इति व्यर्थमिति वाच्यम्। 'न वा उ एतन्म्रियसे न रिष्यसी' ति मन्त्रलिङ्गात् तस्य हिंसात्वाभावेऽपि गृहस्थानामवर्जनीयतुलस्याहरणादिहिंसाया हिंसाधात्वर्थत्वसंभवेन तत्पर्युदासार्थम् **अन्यत्र तीर्थेभ्य** इत्यस्यावश्यकत्वादिति द्रष्टव्यम् । **स खल्वेवं—न च पुनरावर्तते ।**

" आप्रयाणात् तत्रापि हि दृष्ट " मित्यत्र इदमपवर्गसाधनमुपासनमेकस्मिन्नेवाहनि कार्यम्, शास्त्रार्थस्य तावतैव समाप्तत्वादिति पूर्वपक्षं कृत्वा **आप्रयाणात्** आमरणादनुवर्तनीयम् । आमरणं सर्वस्मिन् काले 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते' इत्युपासनस्य दृष्टत्वात् । अत आप्रयाणं कर्तव्यमिति स्थितम् ।

"सहकार्यन्तरविधि" रित्यधिकरणे,—छान्दोग्ये 'अभिसमावृत्य कुटुम्बे शुचौ देश' इत्यारभ्य 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभि संपद्यते न च पुनरावर्तत' इति ब्रह्मविदो यावदायुषं गृहस्थधर्मेण स्थितिदर्शनादाश्रमान्तरेषु न ब्रह्मविद्यास्तीत्याशंक्य सर्वेष्वाश्रमेषु विद्यायाः प्रमाणप्रतिपन्नत्वात् गृहस्थधर्मेणोपसंहारः आश्रमान्तरधर्माणामप्युपलक्षणार्थ इति "कृत्स्नभावात्तु गृहिणोपसंहारः" इति सूत्रेण समर्थितम् ।

"अनावृत्तिश्शब्दादनावृत्तिश्शब्दा" दित्यत्र, 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति शब्दात् मुक्तस्य पुनःप्रकृतिवश्यतालक्षणा आवृत्तिर्नास्तीत्युक्तम् । तत्र पुनरावृत्तौ हि न मुक्तेच्छा हेतुः; अनवधिकातिशयानन्दरूपं ब्रह्मानुभवतः प्राकृतभोगेच्छाया असंभवात् । [1]नापि परमपुरुषेच्छावशात् पुनरावृत्तिः, 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । ज्ञानी त्वात्मैव मे मत' मित्युक्तरीत्या परमप्रियं ज्ञानिनं प्राप्य आत्मानं कृतार्थं मन्यमानस्य परमपुरुषस्य तत्त्यागेच्छाया असंभवात् । नापि कर्मवशात् पुनरावृत्तिः । उच्छिन्नकर्मबन्धत्वेन कर्माधीनाया अपि पुनरावृत्तेरसंभवादिति भाष्ये प्रतिपादितम् । [**न च पुनरावर्तते न च पुनरावर्तत** इति द्विरुक्तिर्ब्रह्मविद्यायाः साङ्गायाः परिसमाप्त्यर्था ॥]

1, अत्र प्रक्रमानुगुणं पाठान्तरं तु —, 'नापि भगवदिच्छा हेतुः; एतल्लाभं महालाभं मन्वानस्य पुनरावर्तनेच्छाया असंभवात् । नापि कर्मसंबन्धो हेतुः; तस्य निःशेषविनष्टत्वादिति इति ।

[1]आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौ(ह्मो) पनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् अनिराकरणमस्तु अनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु । (२)

इति अष्टमाध्याये पञ्चदशः खण्डः

इति अष्टमोऽध्यायः ( अष्टमः प्रपाठकः )

छान्दोग्योपनिषत् संपूर्णा ।

श्रीरस्तु

---

1. इदमष्टमाध्यायाद् बहिष्कृतं शाङ्करे । अन्ते ओं शान्तिः शान्तिः शान्तिरिति च पठितम् ।

---

**आप्यायन्तु—सर्वाणि** । अध्ययनजपादौ शान्तिपाठार्थोऽयं मन्त्रः । मदङ्गानि वागादिभिः सह आप्यायितानि भवन्त्वित्यर्थः । **सर्वं—निराकुर्याम्** । सर्वां ब्रह्मप्रतिपादिकामुपनिषदं प्रति, ब्रह्मविषये च नास्तिक्यबुद्धिं मा कार्षमित्यर्थः । **मा मा ब्रह्म निराकरोत्** । मा मां ब्रह्म निराकुर्यात् । अनुगृह्णात्वित्यर्थः । **अनिराकरणं—अस्तु** । परस्परमनिराकरणमस्त्वित्यर्थः । **तदात्मनि—मयि सन्तु** । आत्मज्ञान-निरतस्य ये धर्माः शान्तिदान्त्यादय उपनिषत्सु प्रसिद्धाः, ते सर्वे मयि सन्त्वित्यर्थः । **ते मयि सन्तु ते मयि सन्त्विति**द्विरुक्तिरुपनिषत्समाप्त्यर्था ॥ ८–१५.

इति छान्दोग्योपनिषद्भाष्ये अष्टमोऽध्यायः (अष्टमः प्रपाठकः)

---

**सर्वां ब्रह्मप्रतिपादिकामुपनिषदं प्रति** इति भाष्यं, 'सर्वां ब्रह्मोपनिषद' मिति पाठाभिप्रायेण स्यात् । 'सर्वं ब्रह्मौपनिषद' मिति पाठे तु सर्वं प्रागुक्तमौपनिषदब्रह्मात्मकं भवतीत्यनुसंधानं कृतं भवति । **अनिराकरणं** कर्मकाण्डदर्शित तदाज्ञादिविषये मम, मदर्पित विषये तस्य चादरः । **आत्मनि निरते** । व्यधिकरणसप्तमी । आत्मविषयकरतिमतीत्यर्थः ॥

यदात्माऽऽविरभूत् साक्षाद्वेदान्तव्याचिकीर्षया ।
रामानुजो जयत्येष रङ्गरामानुजो मुनिः ॥ १ ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदान्वदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमत्तातार्यचरणारविन्दचञ्चरीकस्य
वात्स्यानन्तार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य
परकालमुनिपादसेवासमधिगतपारमहंस्यस्य

**श्रीरङ्गरामानुजमुनेः**

कृतिषु

**छान्दोग्योपनिषत्प्रकाशिका संपूर्णा ॥**

॥ शुभमस्तु ॥

---

अपरहयमुखश्रीवेदचूडार्यमुख्य-
प्रवरगुरुवचोर्थव्याक्रियावित्त एषः ।
सरलविशदसूक्तिः सर्वतन्त्रार्थवेदी
जयति यतिवरः श्रीरङ्गरामानुजाख्यः ॥ २ ॥

तस्यावतारः ख्यातो यो मुनिः श्रीरङ्गलक्ष्मणः ।
तत्प्रशिष्योऽपि विख्यातः परः श्रीरङ्गलक्ष्मणः ॥ ३ ॥

विज्ञानामृतवारिधिः शमनिधिर्वैराग्यवल्लीतरुः
वेतण्डाचलधामधामविषयप्रेमैकमूर्तिर्मुनिः ।
संसाराम्बुधिपोत एष जयति श्रीरङ्गरामानुजः
यद्वीक्षैधितधीविलासविभवेष्वेषोऽपि कश्चिन्मम ॥ ४ ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
**श्रीवीरराघवेणैवं** वेङ्कटाद्रीशसेविना ॥ ५ ॥

छान्दोग्यस्य सभाष्यस्य **परिष्कारः** क्रमात् कृतः ।
उद्गीथप्रणवाकारश्रीहयास्यमुदेऽस्त्वयम् ॥ ६ ॥

इति श्रीमद्वेदान्तरामानुजयतीन्द्रमहादेशिकचरणारविन्दचञ्चरीकस्य
श्रीमद्रङ्गरामानुजयतीन्द्रमहादेशिकपदपद्मसेवासमधिगतसर्ववेदान्तार्थस्य

**वात्स्यसचक्रवर्तिनो वीरराघवाचार्यस्य**

कृतिषु

**छान्दोग्योपनिषद्भाष्यपरिष्कारः ।**

श्रीरस्तु । शुभमस्तु ॥

१३२ पुटे 'यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवती'ति वाक्यस्य, "तथोपासीनस्तथैव प्राप्नोतीत्यर्थः" इति कार्याधिकरण श्रीभाष्यानुरोधेनार्थो वर्णित एव टिप्पणे। अत्र किञ्चिदुच्यते। संभाव्यते तावदत्रान्योऽप्यर्थः—क्रतुशब्दः क्रियामात्रपरः, उपासनमात्रे संकोचस्यायुक्तत्वात्। यच्छब्दः फलपरः। अतएव शाङ्करे क्रतुशब्दस्याध्यवसायरूपार्थवचनेऽपि तथाभवतीत्यस्य क्रत्वनुरूपफलात्मको भवतीत्यर्थ उक्तः। थाल्प्रत्ययस्य प्रकारवाचितया, 'यत्फलावच्छिन्नकायिकवाचिकमानसक्रियावान् पुरुषो भवति, तत्फलावच्छिन्नो भवति' इति विशिष्टार्थः। प्रथममवच्छिन्नत्वं साध्यसाधनभावसंबन्धेन; द्वितीयं भोज्यभोक्तृत्वसंबन्धेन। 'तं यथायथोपासत' इति वाक्यं तु एतद्वाक्योक्तक्रियान्तर्गतोपासनमात्रविषयमस्तु इति। अत्रेदं वक्तव्यम्—लोकवेददृष्टतत्तत्क्रियाबलात् तत्तज्जन्यफलप्राप्तेः तत्तल्लोकवैदिकविधिबलतो विशिष्यैव सिद्धतया व्यर्थमिदं सामान्यवचनमिति।

ननु भवत्पक्षे घटं पटत्वेनोपासीनः पटभूतं घटं प्राप्नोतु। अतो विध्यन्तरसिद्धार्थानुवादमात्रमिदम्। ततश्च तत्तत्प्रकारक तत्तदुपासनबलात् तत्तत्प्रकारलाभस्य तत्तदुपासनविधायकप्रतिनियतविधिभिरेव सिद्धतया वाक्यवैयर्थ्यमेव। अथ तथैव भवतीत्येवकारार्थे नैर्भर्यमिति चेत्—कस्तदर्थः? किमन्ययोगव्यवच्छेदः उतायोगव्यवच्छेदः? नाद्यः; तथासति कतिपयगुणविशिष्टब्रह्मोपासनेऽनुपासितगुणादीनामप्राप्तिरुक्ता स्यात्। तथा च परिपूर्णब्रह्मानुभवरूपत्वं मोक्षस्य न स्यादिति, 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' 'सोऽश्नुते सर्वान् कामान्', 'निरञ्जनः परमं साम्यमुपैति', 'स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य' इत्याद्यनेकश्रुतितदनुसारिसूत्रसंप्रदायादिबहुविरोधः स्यादिति। नान्त्यः; उपासितगुणप्राप्तिरवश्यम्भाविनीत्येतादृशस्यायोगव्यवच्छेदस्य तत्तदुपासनविधिवाक्यत एव सिद्धतया एतद्वचनवैयर्थ्यस्य प्राप्तत्वात्। तत्रतत्रोपासनस्य कारणत्वं ह्युक्तम्। कारणत्वञ्च वेदे, यदुत्तरं कार्यस्यावश्यम्भावः तत्त्वमेवेति। अतो भवदभिमतार्थोऽपि विमृश्य इति।

अत्रोच्यते—अयोगव्यवच्छेद एव फलम्। तथैवेति विशेषणसंगतत्वादेवकारस्य। तस्य तद्व्यवच्छेदार्थकत्वस्वारस्यात्। तत्फलं तु सारप्रकाशिकायामेवं वर्णितम्—अचेतनाकाशादीनामुपासने अपुरुषार्थभूततत्प्राप्तिरेव भवेदिति तेषामनुपास्यत्वम्, तेषां कारणत्वे उपास्यत्वप्रसंगात् अकारणत्वञ्च सिध्यतीति आकाशादिकारणवाक्यानामचेतनातिरिक्तपरत्वनिर्णय इति। अयं भावः—सर्वं खल्विदं ब्रह्म तज्जलानिति

शान्त उपासीतेति पूर्वोक्तं ब्रह्म नाकाशादिकमचेतनं भवितुमर्हतीति तदनन्तरेणानेन वाक्येन ज्ञाप्यत इति । अन्यच्च श्रूयताम् ! तं मामायुरमृतमित्युपास्स्वेत्येवं परविद्यायाम् इतिशब्दश्रवणेऽपि आरोपात्मकमुपासनं न कार्यम् । उपासिताकारस्य प्राप्यवश्यम्भावात् यथावस्थिताकारविशिष्टमेवोपास्यम् । न दृष्टिविधिर्मोक्षाय भवतीति । एवं शरीरे-भावाधिकरणे यदुक्तम्, जीवात्मा कर्तृत्वभोक्तृत्वरूपौपाधिकाकारविशिष्टो नोपास्य इति, तदप्यनेन सिध्यति । उपासिततत्तदौपाधिकाकारप्राप्यवश्यम्भावे तद्विरुद्ध-मोक्षानापत्तेरिति । एवं पञ्चाग्निविद्यायां भूतसूक्ष्मपरिष्वक्तस्यानुपास्यत्वसिद्धिरपि फलम् । तथाच तत्र पञ्चाग्निचिन्तनविधानं संसाराग्निविदीपनव्यपगतप्राणत्वस्य स्वात्मन्यनु-संधानार्थमिति ततस्तदनुसंधाय प्रकृतिवियुक्तयथावस्थितात्मस्वरूपमुपासीतेति । यथा-क्रतुवचनमिदं सामान्यवाक्यम् । 'तं यथायथे'ति तु विशेषपरमिति ।

नन्वन्ययोगव्यवच्छेदस्यात्रानभिमतत्वे शुद्धजीवस्वरूपोपासनादपि ब्रह्मप्राप्तिर्व-चनबलाद् भवतीति किमिति पञ्चाग्निविद्यायां ब्रह्मात्मकत्वानुसंधानमिति चेत्—उच्यते । 'अप्रतीकालम्बनान् नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्चे'ति सूत्रे तत्क्रतुश्चेत्येतदर्थ एवं भाव्यः—ननु पञ्चाग्निविद्यायां भूतसूक्ष्मपरिष्वक्तजीवानु-संधानस्य विहिततया ततो न परब्रह्मप्राप्तिः, 'नान्यः पन्था अयनाय विद्यते' इति निषेधादित्याशङ्कायां तत्क्रतुश्चेत्युक्तम्—भूतसूक्ष्मपरिष्वक्ततयाऽनुसंधाने तत्प्राप्त्य-वश्यम्भावः तत्क्रतुन्यायादिति तदाकारत्यागेन तत्क्रतुन्यायाविरोधाय यथावस्थिता-कारानुसंधानस्यावश्यकत्वे अविशेषात्, 'ज्ञानानन्दमयो ह्यात्मा शेषो हि परमात्मन' इति परब्रह्मात्मकत्वानुसंधानस्यापि प्राप्त्या ब्रह्मानुसंधानस्यात्रान्तर्भावात् न, 'नान्यः पन्था' इति वचनविरोध इति ॥ अत्र तत्क्रतुश्चेत्यनेन सूत्रकृता, अशुद्धजीवोपासकः अशुद्धजीवं प्राप्नोति, कार्यमुपासीनश्च कार्यं प्राप्नोतीति कार्योपासनपक्षोऽपि निराकृतः । तेन यथाक्रतुवाक्यं ब्रह्मरुद्राद्युपासनं तत्तत्प्राप्तिफलकत्वात् मुमुक्षुणा न कार्यम् । ब्रह्माद्याः स्तम्बपर्यन्ताः जगदन्तर्व्यवस्थिताः प्राणिनः कर्मजनितसंसारवशवर्तिनो यतः, ततो न ते ध्याने ध्यानिनामुपकारकाः इत्यर्थज्ञापकं सत्, 'नान्यः पन्था' इतिवत् परविद्यावाक्येषु ब्रह्मरुद्रादिमात्रविवक्षावारकं भवतीत्यपि सिध्यति ।

ननु अन्ययोगव्यवच्छेदवत् अयोगव्यवच्छेदोऽपि दुरुपपादः मोक्षार्थभगव-दुपासने मोक्षे उपासितभगवद्गुणानां प्राप्तावपि ऐश्वर्यकैवल्यार्थोपासने तत्प्राप्त्यभावात् । अतो वाक्यमिदं संभावितस्थलानुवादरूपं सत् अर्थवादमात्रमिति किमत्रार्थविशेषाऽऽग्रहेणेति चेत्—उच्यते । वाक्यस्यास्य केवलार्थवादत्वे सूत्रकारः तत्क्रतुश्चेति इदं न प्रमाणयेत् । तेन हि, प्राप्यविषयकमुपासनञ्च श्रूयते इत्यर्थकेन एतद्वाक्यं

प्रमाणीकृतम् । अत एव न्यायनिबन्धनात्मके ब्रह्मसूत्रे प्रमाणीकृतत्वात् तत्र तत्र तत्क्रतुन्यायेनेति व्यवहारः, न तु तत्क्रतुश्रुत्येति । सूत्रेऽत्र तत्क्रतुश्चेति निबन्धनाद् ज्ञायते, कार्याधिकरणफलफलिभाववर्णनावसरे तत्क्रतुवाक्यस्य केवलार्थवादत्वं पूर्वपक्षे, विवक्षितार्थविशेषकत्वञ्च सिद्धान्ते वर्णनीयमिति । यत्तु अयोगव्यवच्छेदेऽनुपपत्ति-वर्णनम्, तत्राहुः, अस्य वाक्यस्य मोक्षोपासनमात्रविषयकत्वान्न दोषप्रसक्तिरिति ।

इदमप्यत्र बोध्यम्—श्रीभगवद्गीताष्टमाध्याये, 'अन्तकाले च मामेव स्मरन् मुक्त्वा कलेबरम् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः' इति ऐश्वर्याद्यर्थि-नामप्यन्तकाले भगवदनुसंधानं पश्चाद् भगवद्भावरूपं फलञ्च वर्णितम् । उपरि च 'कविं पुराण' मित्यादिनाऽन्तकाले ऐश्वर्यार्थिनोऽनुसंधानं विधास्यति । अन्तकाले तथाऽनुसंधानं प्राक् तथाऽनुसंधाने सत्येवेति तदपि तत्रोक्तमेव । तत्र कवित्वाद्यनु-संधानञ्चापेक्षितैश्वर्यप्रदत्वोपयोगितयेति कवित्वादिमहिमप्रयुक्तैश्वर्यविशेषावच्छिन्नतया कैवल्यरूपस्वानुभाव्यफलानुरूपाकारावच्छिन्नतया च परमात्मानुसंधानात् तत्तत्फलभाक् भवत्युपासक इति ज्ञायते । न केवलमुपासनस्थले, अन्यत्रापि अन्तिमस्मरणानुगुणं फलं प्राप्यत इति च तत्रैवोक्तम्, 'यंयं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम् । तंतमेवैति कौन्तेय सदा तद्भावभावितः' इति । अत एव आदिभरतस्य मृगभावनया अन्तकालाऽऽपतितया मृगभावः । तथा च किञ्चिन्मृगभावनायां भावितमृगजातीयत्वा-पत्तिवत् ऐश्वर्याद्यवच्छिन्नत्वेन परमात्मभावनायां तेन रूपेण तज्जातीयस्वप्राप्तिर्भवतीति सिध्यति । एतदर्थविशेषप्रतिपादकश्चेदं तत्क्रतुवचनमिति स्वरसतः प्रतीयते । अतएव शाङ्करे एतद्वचनव्याख्यानावसरे यंयं वापीति गीतावचनमनुसंहितम् । एवञ्च, 'श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः' इत्येतद्भाष्यानुरोधेनात्र, 'अथ खलु क्रतुमयः पुरुष' इत्यस्य अध्यवसायपरिणामात्मकः पुरुषो भवतीत्यर्थः । तदुपपादनं यथाक्रतुरित्यादिना । अध्यवसिताकारप्राप्तिर्भवति पश्चात् । अतश्चान्तिमकाले पश्चाल्लब्धव्याकारविषयाध्यवसायसंपत्तये तद्भावभावनापरः सन् आदित एव तदेकपरो भवेत् । तदुच्यते स क्रतुं कुर्वीतेति । शाङ्करे तु क्रतुमयः = अध्यवसायप्रचुरः इत्युक्तम् । तथाच यथाक्रतुवाक्यं यंयं वापीति गीतावचनमूलभूतं अन्तिमप्रत्ययानुसारि भाविफलमित्यपूर्वार्थप्रतिपादकम् यथोपासन फलप्राप्तिप्रदर्शनपरमपि; 'स क्रतुं कुर्वीत', 'तं यथायथोपासते तथैव भवती' ति श्रुत्यनुसारादित्यलमत्र विस्तरेण ।

कारिका, सारावली (२३१, ३२५, ३७७) प्रभृतिविमर्शटिप्पणविवरणादि पूर्वमर्थनिर्धारणञ्च परस्तादिति ।

---

# अपूर्वपदानि


| पदम् | स्थानम् |
|---|---|
| उद्गीथः | १. १. |
| आगायति | ,, |
| आखणम् | १–२–८ |
| अभ्याशः | १-३-१२; २ १; ३-१९-४; ५-१० |
| छन्दः | १–४–२ |
| होतृषदनात् | १–५–५ |
| दुरुद्गीथ(त)म् | ,, |
| परःकृष्णम् | १–६–५; ३–४–३ |
| प्रणखात् | १–६–६ |
| कप्यासम् | ,, |
| उत् | १–६–७ |
| गेष्णौ | १–७–५ |
| परोवरीयान् | १–९–२ ; २–७–१ |
| मटची | १–१० |
| आटकी (आटिकी) | ,, |
| इभ्यः | ,, |
| प्रद्राणकः | ,, |
| कुल्माषः | ,, |
| आस्तावः | १–१०–८ |
| प्रस्तावः | १–१०; २–२ |
| प्रतिहारः | ,, ,, |
| समतिसृष्टाः | १–११ |
| शौवउद्गीथः | १–१२ |
| निहवः | १–१३ |
| अनिरुक्तः | ,, २–२२ |
| स्तोभः | ,, |
| संचरः | ,, |
| हाउकारादि | ,, |
| हिङ्कारः | २–२ |
| निधनम् | ,, |
| आदिः | २–८ |
| उपद्रवः | २–८ |
| संप्रति | २–९–५ ; ५–११; ८–११ |
| कक्षम् | २–९–७ |
| गायत्रम् | २–११ |
| रथन्तरम् | २–१२ |
| वामदेव्यम् | २–१३ |
| बृहत् | २–१४ |
| वैरूपम् | २–१५ |
| वैराजम् | २–१६ |
| शक्वर्यः | २–१७ |
| रेवत्यः | २–१८ |
| यज्ञायज्ञीयम् | २–१९ |
| राजनम् | २–२० |
| सलोकता | ,, |
| सार्ष्टिता | ,, |
| सायुज्यम् | ,, |
| विनर्दि | २–२२ |
| निरुक्तः | ,, |
| श्लक्ष्णम् | ,, |
| क्रौञ्चम् | ,, |
| अपध्वान्तम् | ,, |
| वारुणम् | ,, |
| स्वराः | २–२२–३ |
| ऊष्माणः | ,, |
| स्पर्शाः | ,, |

अग्रस्तः
अनिरस्तः
विवृतः
लेशेनानभिनिहित } २-२२-५
धर्मस्कन्धाः २-२३
शङ्कुना २-२३-३
उपाकरणम् २-२४-२
अपूपः ३-१
अभिसंविशन्ति ३-६-३
एकलः ३-११
प्रणाय्यः ३-११-५
गायत्री ३-१२
सुषिः ३-१३
व्युष्टिः ३-१३-४
निनदम् ३-१३-७
नदथुः ,,
अपिगृह्य ,,
क्रतुमयः ३-१४
चतुर्विंशतिवर्षाणीति समस्तम् ३-१६
वास्तेयम् ३-१९
उलूलवः ,,
सयुग्वा ४-१
कृतम् ४-१; ४-३
अयः ४-१
शूद्रः ४-२
उद्गायति ४-३
संवृङ्क्ते ,,
बभसः ,,
अनसूरिः ,,
निराकृत्य ४-४
प्रकाशवान् ४-५
अनन्तवान् ४-६
ज्योतिष्मान् ४-७
आयतनवान् ४-८
ज्योक् ४-११
संयद्वामः ४-१५
वामनीः ,,
भामनीः ,,
आपूर्यमाणपक्षः ,,
देवपथः ,,
यज्ञः ४-१६
रिष्यति ४-१७
विरिष्टम् ,,
उदकप्रवणः ,,
वसिष्ठः ५-१
अहंश्रेयसि ,,
कलाः ,,
पड्वीशशङ्कून् ,,
लम्भुकः ५-२
मन्थम् ,,
संपातम् ५-२; ५-१०
अमा ,,
देवयानः ५-३
पितृयाणः ,,
पुरुषवचसः ५-३
अर्धम् ,,
श्रद्धा ५-४
कपूयां ५-१०
महाशालाः ५-११
वैश्वानरः ,,
सुतेजाः ५-१२; ५-१८
सुतम् ५-१२
आसुतम् ,,
विश्वरूपः ५-१३; ५-१८
पृथग्वर्त्मा ५-१४; ,,

| | | | |
|---|---|---|---|
| बहुलः | ५–१५ | लोकः | ८–१; ८–२ |
| संदेहः | ,, | संप्रसादः | ८–३ |
| बस्तिः | ५–१६ | सत्यम् | ,, |
| रयिः | ५–१६ | इष्टम् | ८–५ |
| प्रतिष्ठा | ५–१७ | सत्त्रायणम् | ,, |
| प्रादेशमात्रम् | ५–१८ | मौनम् | ,, |
| अभिविमानम् | ,, | अनाशकायनम् | ,, |
| भक्तम् | ५–१९ | अरण्यायनम् | ,, |
| अनूचानः | ६–१ | अरः | ,, |
| स्तब्धः | ,, | ण्यः | ,, |
| आदेशः | ,, | ऐरम्मदीयम् | ,, |
| त्रिवृत् | ६–३; ६–४; ६–८ | सोमसवनः | ,, |
| धातुः | ६–५ | अपराजिता | ,, |
| षोडशकलः | ६–७ | प्रभुविमितम् | ,, |
| शुङ्गम् | ६–८ | स्नामः | ८–९ |
| धानाः | ६–१२ | साम्येण | ८–१० |
| वाकोवाक्यम् | ७–१ | प्रयोग्यः | ८–१२ |
| संकल्पते | ७–४ | आचरणे | ,, |
| चित्तम् | ७–५ | श्यामम् | ८–१३ |
| ध्यानापादांशः | ७–६ | शबलम् | ,, |
| उरुगायवतः | ७–१२ | यशः | ८–१४ |
| स्मरः | ७–१३; ७–१४ | श्येतम् | ,, |
| अतिवादी | ७–१५ | अदत्कम् | ,, |
| भूमा | ७–२३ | लिन्दु | ,, |
| ब्रह्मपुरम् | ८–१ | अतिशेष | १–१०; ८–१५ |
| दहरम् | ,, | तीर्थेभ्यः | ,, |


शुभमस्तु

SRI VENKATESVARA ORIENTAL INSTITUTE, TIRUPATI

## Price list of Publications

---

*General Editor* :—PROF P. V. RAMANUJASWAMI, M.A., *Director.*

---

*Sri Venkatesvara Oriental Series* :—

| | | Rs. | A |
|---|---|---|---|
| 1. | **Sri Venkatesvara Kavya Kalapa,** (Sanskrit) Ed. by Sri D. T. Tatacharya, M.O.L. ... | 4 | 0 |
| 2. | **History of Tirupati,** Volume II (English) by Dr. S. Krishnaswami Aiyangar, M.A., Ph.D. *(Out of Stock)* | | |
| 3. | **A Glossary of Indian Philosophical Terms,** (Sanskrit-English) by Sri C. V. Sankara Rao, M.A. ... | 1 | 8 |
| 4. | **Psychology,** (Telugu) by Dr. K. C. Varadachari, M.A., Ph.D. *(Out of Stock)* | | |
| 5. | **Isavasyopanishad Bhashya,** of Venkatanatha, (Sanskrit-English) Ed. & Translated by Dr. K. C. Varadachari, M.A., Ph.D. & Sri D. T. Tatacharya, M.O.L. *(Out of Stock)* | | |
| 6. | **Samurtarchanadhikarana (Atri Samhita),** (Sanskrit) Ed. by Mr. Raghunatha Chakravarthi Bhattacharya & Sri M. Ramakrishna Kavi, M.A. | 6 | 0 |
| 7. | **Suvarnasaptati Sastra.** (Sanskrit) Reconstructed from the Chinese & Ed. by Sri N. Aiyaswami Sastri ... | 3 | 0 |
| 8. | **Kenopanishad Bhashya,** by Rangaramanuja (Sanskrit-English) Ed. & Translated by Dr. K. C. Varadachari, M.A., Ph.D. & Sri D. T. Tatacharya, M.O.L. ... ... ... ... | 1 | 0 |
| 9. | **Tirukkural-Kamattuppal,** with the commentaries of Kalingar and Paripperumal (Tamil) Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... ... | 2 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 10. | **Sri Venkatesvara Vachanamulu,** (Telugu) Edited by Sri V. Prabhakara Sastri ... ... | 1 | 8 |
| 11. | **Sringarasankirtanamulu,** Vol. IV of Tallapaka Annamacharyulu (Telugu) Ed. by Sri V. Prabhakara Sastri ... ... ... ... | 2 | 0 |
| 12. | **Kasyapa-Jnanakanda (Kasyapa Samhita),** (Sanskrit) Ed. by Sri R. Parthasarthi Bhattachar ... | 3 | 0 |
| 13. | **Andhra-Kuvalayanandamu** ,(Telugu) by Ubhayabhasha Pravina Sri K. Subrahmanya Sastri ... | 3 | 12 |
| 14. | **Tirukkural-Porutpal,** with the commentaries of Kalingar and Paripperumal (Tamil) Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... .. | 4 | 0 |
| 15. | **Kathopanishad Bhashya,** of Rangaramanuja (Sanskrit-English) Ed and Translated by Dr. K. C. Varadachari, M.A., Ph. D. and Sri D. T. Tatacharya, M.O.L. ... ... ... | 3 | 12 |
| 16. | **Sri Venkatesvara Laghu Kritulu,** (Telugu) Edited by Sri V. Prabhakara Sastri ... ... | 1 | 8 |
| 17. | **Annamacharya Charitramu,** (Telugu) Edited by Sri V. Prabhakara Sastri ... ... ... | 2 | 8 |
| 18. | **Tiruvengada Sthalapuranam,** (Tamil) with prose supplement Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... ... ... ... | 1 | 8 |
| 19. | **Alankarasangraha,** of Amritanandayogi, (Sanskrit) Edited by Sri P. Balakrishnamurti, M.A. | 3 | 4 |
| 20. | **Subhadra Kalyanamu,** (Telugu) by Tallapaka Timmakka, Ed. by Sri V. Prabhakara Sastri .. | 0 | 12 |
| 20a. | **Sankaravilasam,** (Tamil) Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... ... ... | 3 | 4 |
| 21. | **Janasrayi,** (Sanskrit) Ed. by Sri M. Ramakrishna Kavi, M.A. ... ... . | 1 | 0 |
| 22. | **Adhyatmasankirtanalu,** Vol. V. of Tallapaka Annamacharyulu (Telugu) Ed. by Sri V. Prabhakara Sastri ... ... ... | 3 | 4 |

| No. | Title | Rs. | A. |
|---|---|---|---|
| | **Tiruvengada Ula,** (Tamil) Ed. by Sri T. P. Palaniappa Pillai, B.O.L. ... ... | 1 | 8 |
| | **Adhyatmasankirtanalu,** Vol. VI of Tallapaka Annamacharyulu (Telugu) Ed. by Sri A. V. Srinivasachari ... ... ... | 2 | 0 |
| | **Prasnopanishad Bhashya,** of Rangaramanuja (Sanskrit-English) Ed. and Translated by Dr. K. C. Varadachari, M.A., Ph.D. and Sri D. T. Tatacharya, M.O.L. ... ... ... | 2 | 12 |
| [illegible] | **Sri Venkatesvara Stuti Ratnamala,** (Telugu) Ed. by Sri V. Prabhakara Sastri ... ... | 1 | 2 |
| 7. | **Dharmasangraha,** (Sanskrit) Ed. by Prof. P. V. Ramanujaswami, M.A. ... ... ... | 2 | 0 |
| 8. | **Nipatavyayopasargavritti,** (Sanskrit) Ed. by Vidya Pravina Sri A. Someswarasarma, P.O.L. ... | 2 | 0 |
| [illegible]9. | **Adhyatmasankirtanalu,** Vol. VII of Tallapaka Annamacharyulu (Telugu) Ed. by Sri R. Anantakrishna Sarma & Sri A. V. Srinivasachari ... | 3 | 0 |
| 30. | **Bharata Kosa,** (Sanskrit) Ed. by Sri M. Ramakrishna Kavi, M.A. ... ... ... | 22 | 0 |
| 31. | **Adhyatmasankirtanalu,** Vol. VIII of Tallapaka Annamacharyulu (Tel.) Ed. by Sri R. Anantakrishna Sarma & A. V. Srinivasachari ... | 3 | 0 |
| 32. | **Raghuvamsa,** (Cantos 1 & 2), Translated into Tamil and Ed. by Sri D. T. Tatacharya, M.O.L. | ... | |
| 33. | **Adhyatmasankirtanalu,** Vol. IX of Tallapaka Annamacharyulu (Tel.) Ed. by Sri R. Anantakrishna Sarma ... ... ... ... | 3 | 0 |
| 34. | **Sri Venkatesvara Stuti Ratnamala,** (Tel.) Vol. II Ed. by Sri K. Ramakrishniaya, M.A. ... ... | 2 | 0 |
| 35. | **Adhyatmasankirtanalu,** Vol. X of Tallapaka Annamacharyulu (Tel.) Ed. by Sri R. Ananthakrishna Sarma ... ... ... ... | ... | |

| *Sri Venkatesvara Oriental Institute Studies* :— | Rs. | A. |
|---|---|---|
| 1. **Theory of Knowledge in the Philosophy of Sri Ramanuja** (English) by Dr. K. C. Varadachari, M.A. Ph.D. ... ... ... ... | 3 | 0 |
| 2. **Rupakaparisuddhi** (Sanskrit) by Sri D. T. Tatacharya, M.O.L. ... ... ... | 1 | 0 |
| 3. **Idea of God** (English) by Dr. K. C. Varadachari, M.A., Ph. D. .. ... ... ... | 3 | 0 |
| 4. **Sahityavimarsa** (Sanskrit) by Vidya Pravina Sri A. Someswarasarma, P.O.L. ... ... | 2 | 0 |
| 5. **The Dharmasutras & the Dharmasastras** (English) by Dewan Bahadur K. S. Ramaswami Sastri, B.A., B.L. ... ... ... ... | 0 | 12 |
| 6. **Virasaiva Literature,** (Telugu) by Sri S. Ramakrishna Sastri, M.A., B.O.L. ... ... ... | 5 | 0 |

*For copies of the above apply to* :—

THE DIRECTOR,

S. V. Oriental Institute, TIRUPATI,

(*Chittoor Dist.*) *South India.*